येम ॥ २ ॥ वक्ष्यंतीऽइव इत् आ गनीगंति कर्णं प्रियं सखायं परि-
ऽसस्वजाना योषाऽइव शिंक्ते विऽतता अधि धन्वन् ज्या इयं
समने पारयंती ॥ ३ ॥ ते आऽचरंती॰ समनाऽइव योषा माता-
ऽइव पुत्रं बिभृतां उपऽस्थे अप शत्रून् विध्यतां संऽविदाने॰
आर्त्नी इमे विऽस्फुरंती॰ अमित्रान् ॥ ४ ॥ बह्वीनां पिता बहुः
अस्य पुत्रः चिश्चा कृणोति समना अवऽगत्य इषुऽधिः संकाः पृ-
तनाः च सर्वाः पृष्ठे निऽनद्धः जयति प्रऽसूतः ॥ ५ ॥ १९ ॥ रथे तिष्ठन्
नयति वाजिनः पुरः यत्रऽयत्र कामयते सुऽसारथिः अभीशूनां
महिमानं पनायत मनः पश्चात् अनु यच्छंति रश्मयः ॥ ६ ॥ तीव्रान्
घोषान् कृण्वते वृषऽपाणयः अश्वाः रथेभिः सह वाजयंतः अव-
ऽक्रामंतः प्रऽपदैः अमित्रान् क्षिणंति शत्रून् अनपऽव्ययंतः ॥ ७ ॥
रथऽवाहनं हविः अस्य नाम यत्र आयुधं निऽहितं अस्य वर्म तत्र
रथं उप शग्मं सदेम विश्वाहा वयं सुऽमनस्यमानाः ॥ ८ ॥ स्वा-
दुऽसंसदः पितरः वयःऽधाः कृच्छ्रेऽश्रितः शक्तिऽवंतः गभीराः
चित्रऽसेनाः इषुऽबलाः अमृध्राः सतःऽवीराः उरवः व्रातऽसहाः
॥ ९ ॥ ब्राह्मणासः पितरः सोम्यासः शिवे नः द्यावापृथिवी अने-
हसा पूषा नः पातु दुःऽइतात् ऋतऽवृधः रक्ष माकिः नः अघ-
ऽशंसः ईशत ॥ १० ॥ २० ॥ सुऽपर्णं वस्ते मृगः अस्याः दंतः गोभिः
संऽनद्धा पतति प्रऽसूता यत्र नरः सं च वि च द्रवंति तत्र अस्मभ्यं
इषवः शर्म यंसन् ॥ ११ ॥ ऋजीते परि वृंग्धि नः अश्मा भवतु नः तनूः
सोमः अधि ब्रवीतु नः अदितिः शर्म यच्छतु ॥ १२ ॥ आ जंघंति सानु
एषां जघनान् उप जिघ्नते अश्वऽअजनि प्रऽचेतसः अश्वान्
समत्ऽसु चोदय ॥ १३ ॥ अहिःऽइव भोगैः परि एति बाहुं ज्या-
याः हेतिं परिऽबाधमानः हस्तऽघ्नः विश्वा वयुनानि विद्वान् पु-

मान्मुमांसं परिं पातु विश्वतः ॥१४॥ आलांक्ता या रुरुंशी-
र्ष्ण्यथो यस्या अयो मुखं। इदं पर्जन्यंरेतस इष्वैं देव्यै बृह-
न्नमः ॥१५॥२१॥ अवंसृष्टा परां पत शरंव्ये ब्रह्मसंशिते।
गच्छामित्रान्प्र पद्यस्व मामीषां कं चनोच्छिषः ॥१६॥ यत्रं
बाणाः संपतंति कुमारा विशिखा इंव। तत्रां नो ब्रह्मणस्प-
तिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥१७॥ मर्माणि
ते वर्मणा छादयामि सोमंस्त्वा राजामृतेनानुं वस्तां। उरो-
र्वरीयो वरुणस्ते कृणोतु जयंतं त्वानुं देवा मंदंतु ॥१८॥ यो
नः स्वो अरंणो यश्च निष्ट्यो जिघांसति। देवास्तं सर्वे धूर्वंतु
ब्रह्म वर्म ममांतरं ॥१९॥२२॥६॥६॥

॥ इति षष्ठं मंडलं समाप्तं ॥

---

मा॑न् पू॒मांसं॒ परि॑ पातु वि॒श्वतः॑ ॥ १४ ॥ आल॑ऽअक्ता या रुरु॑ऽशी-
र्ष्ण्य॑ अथो॑ यस्याः॑ अयः॑ मुख॑ इ॒दं पर्जन्य॑ऽरेतसे इष्वै॑ दे॒व्यै बृहत्
नमः॑ ॥ १५ ॥ २१ ॥ अव॑ऽसृष्टा परा॑ पत शर॑व्ये ब्रह्म॑ऽसंशिते गच्छ॑
अ॒मित्रा॑न् प्र प॒द्यस्व॒ मा अ॒मीषां॑ कं च॒न उत् शि॒षः॑ ॥ १६ ॥ यत्र॑
बा॒णाः॑ सं॒ऽपत॑न्ति कु॒मा॒राः॑ वि॒शि॒खाः॑ऽइ॑व तत्र॑ नः॒ ब्रह्म॑णः॒ पतिः॑
अदि॑तिः॑ शर्म॑ य॒च्छ॒तु॒ वि॒श्वाहा॑ शर्म॑ य॒च्छ॒तु॒ ॥ १७ ॥ मर्मा॑णि ते॒
वर्म॑णा छा॒द॒या॒मि॒ सोमः॑ त्वा॒ राजा॑ अ॒मृते॑न अनु॑ व॒स्तां॒ उ॒रोः॑ व-
री॑यः॒ वरु॑णः॒ ते॒ कृ॒णो॒तु॒ जय॑न्तं त्वा॒ अनु॑ दे॒वाः॑ म॒द॒न्तु॒ ॥ १८ ॥ यः॑ न॒ः स्वः॑
अर॑णः॒ यः॑ च॒ निष्ट्यः॑ जिघां॑सति दे॒वाः॑ तं सर्वे॑ धू॒र्व॒न्तु॒ ब्रह्म॑ वर्म॑ मम॑
अन्त॑रं ॥ १९ ॥ २२ ॥ ६ ॥ ६ ॥

॥ इति षष्ठं मंडलं समाप्तं ॥



*Reprinted by*
K. L. Sachadeva, Skylark Printers, 479, Matia Mahal, Delhi-6.
(Offi. K 2/8 Model Town, Delhi-9 Phone 225689)